वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका


संपुटः १५ | JANUARY 1977 | क्रमांकः १





नळ पुष्याङ्कः | शकाब्दाः १८९८ | मूल्यम् ०–५० पैसाः

# विषयसूचिका







# सूत्रचक्रम्

—जयेशः, पुसद् ।

चक्र घर्गर घूर्णेन संजातध्वनिना सदा ।
आग्लानां हृदये भीतिः चर्ँ-चर्ँ थर्-थर् कृतं किल ॥ १

हस्तेन भ्रामयन् चक्रं कार्पसीपूंजपूरितम् ।
लघुदीर्घमितैः सूत्रैः हस्तेन च युतंपटम् ॥ २

'खादी' नाम्ना सुविख्यातं गंगावन्निर्मलं शुभम् ।
गंगावतरणं मत्वा सहर्षं पूज्यते जनैः ॥ ३

सत्यसूर्योदयः किन्तु अहिंसायाः हिमालये ।
भाति सूत्रस्य चक्रं नः अशोकस्य हरे रिव ॥ ४



# मासानां मार्गशीर्षोऽहम्

चन्द्रमसः षोडशकलापूर्णस्य यया तारया सह संबन्धो भवति, तस्या एव तारायाः नाम्ना तस्य मासस्य व्यवहारो भवतीति स्पष्टमेव। चित्रानक्षत्रयोगे पौर्णमास्याः, मासस्य चैत्रमिति नाम यथा; तथैव मृगशीर्षनक्षत्रयोगे पौर्णमास्याः, मासो मार्गशीर्षनामा भवति। इदानीं प्रवर्तमानस्य मार्गशीर्षमासस्य आग्रहायण मित्यपरं नामाऽस्ति। अग्रे हायनस्य - संवत्सरस्य यत्तदाग्रहायणं भवति। अनेन नाम्ना मार्गशीर्षः कदाचित् संवत्सरस्य आदिमो मास आसीदिति; एतत्प्राथम्य - प्रयुक्तं प्राशस्त्यं पुरस्कृत्यैव मार्गशीर्षमासस्य भगवद्गीतायां विभूतियोगे भगवदात्मकत्वरूपा मान्यता प्राप्ता इति च प्रतीति रस्ति।

अस्मिन् वत्सरे मार्गशीर्षमासे "कालः परमशोभनः" इति व्यवहारयोग्यः समीचीन स्समयः समपद्यत। १-१-१९७७ दिनाङ्के वैकुण्ठैकादशी, स्थिरवासरः, कृत्तिकानक्षत्रं इत्येतत् त्रितयं एकत्रितं हिन्दूमतानुयायिनां अत्यन्तं विशिष्टं विलक्षणं सुदिनं आसीत्। तस्मिन्नेव दिने महम्मदीयानां मोहरं, क्रैस्तवानां संवत्सरादिश्च समघटत। प्रपञ्चे प्रसिद्धमतानुयायिनां बहूनां जनानां पुण्यदिन मेक मासीत्। एतादृशः समयविशेषः कादाचित्को भवति।

एव मस्मिन्नेव मासि प्रयागक्षेत्रे (अलहाबाद्) कुम्भमेलोत्सवः जनवरि ५ दिनाङ्कात् प्रारप्स्यते। कुम्भमेलासमये बृहस्पतिः, द्वादशवर्षानन्तरं कुम्भराशिप्रवेशं करोति। तत्रापि १४४

संवत्सरानन्तरं प्रवर्तमाने कुम्भमेलोत्सवे, ग्रहनक्षत्राणां पवित्रस्थागतानां सतां, गंगा - यमुना - सरस्वतीति प्रख्यात - त्रिवेणी-सङ्गमस्थले स्नानं अत्यन्तपुण्यप्रदमिति प्राचीनभारतीयसंस्कृति-प्रियाणां विश्वासः।

कुम्भमेलोत्सवसन्दर्भे गाथेयं श्रूयते — क्षीरसागरात् समुद्-भूतं अमृतकलशं राक्षसेभ्यः रक्षितुकामः इन्द्रपुत्रो जयन्तः सुदूरं गृहीत्वा गत इति पुराणानि। एवं अमृतकलशं गृहीत्वा गच्छतः तस्य द्वादशाहानि (१२ संवत्सराः) देवमानेन अतीतानि। मध्येमार्गं स हरिद्वारं, प्रयागक्षेत्रं (अलहाबाद्) उज्जयिनीं नासिकास्थलं च प्राप्य अमृतकलशं निक्षिप्तवान् यतः, तत एव हेतोः प्रतिवर्षत्रयानन्तरं पूर्वोक्तस्थलचतुष्टये कुम्भ-मेलोत्सवः प्रवर्तते। अमृतकुम्भनिक्षेपणमेव अस्य कुम्भमेलो-त्सवस्य प्रवृत्तिनिमित्तमिति ज्ञायते। अत्रापि बृहस्पतेः कुम्भ-राशिप्रवेशः कुम्भोत्सवप्रवृत्तिनिमित्तं द्रढयन् हेम्नः परमामोदं पुष्णाति। बहुशः कुम्भमेलोत्सवः एक एव सर्वत्राऽपि भारतवर्षे अत्यन्तप्राचीनतमः बहुजनसमादृतः राष्ट्रीय-सांस्कृतिकोत्सवः इति वक्तुं शक्यते।

हिन्दूमतविकासार्थं भारतीयपूर्वाचार्यैः दशगणेषु विभक्ताः ऋषयः, तद्गणाधिपतयः तत्र तत्र सादरं सभक्तिश्रद्धं मिलित्वा विचारविनियमं आचारप्रचारं च कर्तुं प्रभवन्ति स्म। एवं प्रवर्त-मानः कुम्भमेलोत्सवोऽपि अस्मिन्नेव मासे समापतति इति महती प्रीतिरास्तिकानाम् नूनं भगवता प्रतिपादितं "मासानां मार्ग-शीर्षोऽहं" इति यथार्थवाद एव भवितुमर्हति न तु केवलार्थवादो विभूतियोगप्रकरणतात्पर्येण इति शम्।

# नैषधं विद्वदौषधम्

कोण्डमञ्चिलि रामकृष्णशर्मा, पिठापुरम्।

सुविज्ञातमेव खल्विदं यत्, संस्कृतसाहित्यसागरे मुक्तामणि-सदृशं नैषधाख्यं महाकाव्य मस्तीति। तस्य महत्प्राशस्त्यमपि सुविदितमेव हि "नैषधं विद्वदौषध" — मिति लोकोक्त्या। वचन-मिदमुचितं वा अनुचितमित्यत्र विचारयामः।

सकलविद्वज्जनमनोहर्षदायकेन श्रीहर्षेणेदं काव्यरत्नं गुम्फितं संस्कृतकाव्यमुक्तामणिमालायाम्। श्रीहर्षोऽत्र भिषक्। तेन विरचितं 'नैषधम्' औषधम्। यथा'भिषगौषधं' रोगिणां रोगं दूरीकृत्य हर्षं दधाति, तथैवेदं 'हर्ष'विरचितं 'नैषदौषधं' विदुषां सर्वकालेषु हर्षं ददाति। अपि चैदं सकलाघविध्वंस पटीयः। तस्मात् नैषधं विद्वदौषध मित्युक्तवचनमुचितमेव।

अन्यच्च यथा मधुर - आम्ल - लवण - कटु - कषाय - तिक्त भेदेन षड्विधमौषधं, तथैव शिक्षा - व्याकरण - च्छन्दो - ज्योतिष - कल्प - निरुक्तादिभिः षडभिर्युतं 'नैषधम्'।

वातपित्तकफानां आधिक्येनाल्पत्वे वा औषधं तत्तत्कालानु-गुणं सेव्यते यथा, तथैव उल्बणानुल्बणसमतारूपधर्मत्वेन नैषध-मपि। तस्मात् "नैषधं विद्वदौषध"मिति वाक्यं विद्वज्जनमनो-मोदकरमेव।

अपि च 'औषधं' केवलरसनेन्द्रियग्राह्यम्। 'नैषदौषधं' तु पठनेन रसनेन्द्रियश्रवणेन्द्रियाभ्यां ग्रहीतुं शक्यम्। 'औषधे' आम्लादि षड्रसा एव सन्ति। नैषधे तु शृङ्गारादिनवरसाः सन्ति। अन्यच्च केषांचन महारोगाणां विषये 'औषधं' निष्फलं भवति, 'नैषधं' तु न। सर्वत्र सफल-मेव भवति। अपि च —

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्॥

इत्युक्तवात् नैषदौषधमिदं सर्वेषां कलिदोषनाशकं, मुक्तिदायकं च।

# श्रीमध्वाचार्यः

— "अवरः"

श्रीमध्वाचार्यस्तुतिः

प्रथमो हनुमान्नामा द्वितीयो भीम एव च,
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ।
अभ्रमं भङ्गरहितं अजडं विमलं सदा,
आनन्दतीर्थं मतुलं भजे तापत्रयापहम् ॥

(१) बाल्यवैभवम् —

कर्नाटकराज्ये दक्षिणकन्नडप्रान्ते "उडिपि" नाम पट्टण मस्ति । तत्समीपे "सगरि" नामकाग्रहारे मध्यगेहभट्टो नाम ब्राह्मणोत्तमः आसीत् । स च महापण्डितः वेदवतीनाम्नीं साध्वीं उपयेमे । तयोः दम्पत्योः द्वौ पुत्रौ एका पुत्री च अजायन्त । दैववशात् पुत्रौ मृतौ । पुत्रशोकेन सन्तप्तचित्ता वेदवती भर्तार माह — मया इतः परं अस्मिन् ग्रामे वसितुं न शक्यते; यत्र क्वाऽपि गच्छामः, इति । मध्यगेहभट्टः ततः सतीसमेतः प्रस्थितः; उडिपि नगरस्य आग्नेय्यां दिशि अष्टमैल्परिमितदूरे पाजकक्षेत्रं गतः ।

पुत्राभावे पुन्नाम्नो नरकादुत्तरण मशक्यमिति हेतोः गुणिनं पुत्र मनुगृह्णीष्वेति तौ दम्पती उडिपिवासिनं अनन्तेश्वरस्वामिनं प्रार्थयामासतुः ।

तयोः पुण्यदम्पत्योः भक्त्या तुष्टः अनन्तेश्वरः मुख्यप्राणदेवं वायु माहूय भद्र ! त्व मनयो र्दम्पत्योः पुत्रोऽवतर। लोके अधर्मः प्रभवति; जगत्सर्वं मिथ्येति मायावादः क्वचिद्विजृम्भते। "अस्माभिः न किञ्चित्कर्तव्यम्; सर्वं स एव सर्वेश्वरः परिरक्षेत् अस्माभिस्तु केवलं प्रपन्नैर्भाव्यं, आत्मसमर्पणं च कार्यम्" इति अन्यः कश्चिद्वादोऽन्यतः प्रस्थितः वेदानां उपनिषदां ब्रह्मसूत्राणां च स्वस्वमतानुसारेण अर्थान् विवृण्वन्तः परमात्मनः जीवात्मनां च यथावस्थितं संबन्धं न ज्ञातुं पारयन्ति। "अहं ब्रह्मास्मि" इति केचिद्वदन्तः दुरहंकारिणो भवन्ति चेत् अन्ये केचित् "प्रपत्ति" नाम्ना प्रयत्नशून्याः जडत्वं भजन्ति। अथ साधारणा जनाः किं सत्य मित्यजानन्तः संशयात्मानो भवन्ति। अतः त्व मवतार-रूपेण अनयो र्दम्पत्योः पुत्रो भूत्वा सत्यमार्गप्रतिष्ठापनं कुरु, इति समादिशत्।

कतिपयदिनेषु अतीतेषु मकरसंक्रान्ति-सन्दर्भे अनन्तेश्वर-स्वामिनः रथोत्सवसमये कश्चिदुन्मत्त इव परिदृश्यमानः सहसा गरुड (ध्वज) स्तम्भं आरुह्य तच्छिखरे नर्तितु मारेभे। सर्वेऽपि तं पश्यन्त स्ततोऽधः पतितो नूनं मरिष्यतीत्यमन्यन्त। एवं मन्यमानानां तेषां जनानां पश्यता मेव सतां, स्तम्भोपरि नृत्यन्नुन्मत्तः एव माह — "भगवान् वायुः मुमुक्षु - जन - हृदयानन्दाय लोकोद्धा-राय च अवतरिष्यति" इति। तदनु स स्तम्भादवरुह्य निरपायः स्थलं गत एव मूर्छितो बभूव। दैवावेशेन तन्मुखतः शुभेयं वार्ता श्राविततेति विश्वस्य जना स्तं स्वस्थचित्तमकुर्वन्।

एतद्घटनानन्तरं पाजकक्षेत्रे वेदवती दिव्यं तेजः नव मासान् गर्भे धृत्वा शिशुं प्रासूत। तस्य शिशोः मध्यगेहभट्टः "वासुदेव"

इति नाम चकार। वासुदेव इति शब्दस्य "वा + असुदेव" इति व्युत्पत्त्या "जीवोत्तमो वायुर्भगवानि"ति अर्थविशेषो लभ्यते।

शिशोः चतुर्थमासे अनन्तेश्वरसंदर्शनार्थं शिशुहस्तया पत्न्या सह मध्यगेहभट्टः, अनुगच्छति सेवके, गृहान्निर्गत्य उडिपिनगर मार्गं गच्छन्नास्त। मध्येमार्गं कस्य चिद्वटवृक्षस्य अधस्ता द्विश्रान्त्यर्थं सपरिवार मुपाविशत्। आत्रान्तरे "हा! हतोऽ-स्मीति सेवकः सार्तनादं अधः पपात। ससंभ्रमं किमरे! किं वृत्त-मिति मध्यगेहभट्टः त मुपसृत्य उत्थाप्य धैर्यमुद्बोध्याऽपृच्छत्। सोऽपि भीत भीतः "अहो! रक्षः! स एव राक्षसः मच्छिरसि आपतितः, इदानीं पुनः वृक्षमारोहन्नास्ते" इति अकथयत्। भट्टः ततो दृष्टिं प्रसार्य किमप्यपश्यन् "अधीरस्त्वं भ्रान्त्या बिभेषि; न किंचिद्दृश्यते, मा भैषी" रित्याश्वासयामास।

अत्रान्तरे वृक्षाग्रा देवं श्रुतं — "ब्राह्मणोत्तम! स न भ्रान्तः। अहमस्मि ब्रह्मरक्षः, अधिवसामि चेमं वटवृक्षम्। तं भक्षयितु मुद्युक्तोऽभवम्। परन्तु युष्माकं मध्ये बालरूपेण स्थितं भगवन्तं वायुदेवं दृष्ट्वा तत्कृत्याद्विरम्य वृक्षाग्र मभि-द्रुतोऽस्मि। इतः परं न युष्माकं मदीया भीतिः। निर्भयं विश्रम्यतां" इति। भट्टः राक्षसं प्रति "सर्वेश्वरः हरिः स्मर्यतां तव विमुक्ति र्भविष्यती" त्याह।

ब्रह्मराक्षसः - महात्मन्! जनन्या उत्सङ्गे बालरूपेण स्तन्यं पिबन्तं मुख्यप्राणदेवं संपश्यत एव मे विमुक्ति र्जाता; गन्तास्मि।

भट्टपरिवारः अनन्तेश्वरसन्दर्शनानन्तरं यदा प्रतिनिवृत्तः तदा मासद्वयानन्तरं अद्भुतं किंचिद्वृत्तम्। वेदवती "शिशुं

भ्रातरं खेलये, त्युक्त्वा पुत्रीं, प्रातिवेशिक-गृहं गता। बालो वासुदेवः रोदितु मारेभे। बालिकया आश्वासितोऽपि बालो रोदनान्न निवृत्तः। गृहे पक्वं कुलुत्थं अभ्यूषं (ഒരുതരം) साऽपश्यत्। एकं कुलुत्थ-पुलाकं गृहीत्वा रुदतः शिशोः मुखे सा यावत् न्यक्षिपत्; बालो न रोदिति; मुखन्यस्तं कुलुत्थपुलाकं आस्वादयन्निगीर्णवान्। पुनः स रोदितु मारेभे यदा पुनः साऽपि रोदनान्निबर्तयितुं एकैकं कुलुत्थपुलाकं तन्मुखे निक्षिपन्ती आसीत्। बालः एकैकमपि आस्वादयन् निगिरन्नास्त। एवं रीत्या सा एकैक मास्वादयति स च एकैकं भक्षयति; अन्ते च अभ्यूषभाण्डं रिक्त मभूत्। विदितवृत्तान्ता वेदवती "अय्यो! अकृत्यं हि कृतवन्त्यसि। अन्नप्राशनानर्हस्य शिशोः अभ्यूषभक्षणं किं युक्तं? अजीर्णं सत् तदुदरबाधां न जनये त्किं?" इति पुत्रीं नानादुरुक्तैः दूषयन्ती वैद्यगृह मभिद्रुतवती। वैद्य स्समागत्य पाणी पादौ विक्षिपन्तं खेलन्तं हसन्मुखं बालं दृष्ट्वा "अस्य सर्वं जीर्ण मासीत्, न भेतव्यं" इत्युक्त्वा गतो यथागतम्।

वेदवती विस्मिता सस्मिता पश्यति। मध्यगेहभट्टः हसन्नाह — रामावतारसमये हनुमान्, कृष्णावतारकाले भीमसेनः, अस्मिन् कलियुगे अस्मदीयश्च वायुदेवांशसम्भूताः। आञ्जनेयः बुभुक्षाचोदितः सूर्यबिम्बं फलबुद्ध्या भक्षयितु मुद्यक्तः। भीमसेनः बकासुरार्थं नीतं शकटपरिमितमन्नं अभक्षयत्। तादृशमहाबलानुज एव खलु अय मस्मदीयोऽपि। अतोऽस्य शिशोरपि कुलुत्थाभ्यूषस्य का वा गणना" इति।

[अनुवर्तते]

# अस्मत्परीक्षामन्त्री सम्मानितः





श्रीमता कीलात्तूरु श्रीनिवासाचार्येण परीक्षामन्त्रिणा विरच्य प्रकाशितस्य श्रीवेदान्तदेशिकविरचित - 'दयाशतक'-तमिलानुवादग्रन्थस्य आविष्कारः अस्मत्सभाया मद्रपुर्यनुबन्धसभया ११–१२–७६ शनिवासरे कारितः ।

मद्रानुबन्धसभाध्यक्षः, भूतपूर्व - मद्रपुर्युन्नतन्यायालयप्राड्विवाकश्च श्री यन्. कृष्णस्वामिरेड्डिमहाशयः आध्यक्ष्यमवहत् । भूतपूर्वकेन्द्रमन्त्रिणा श्रीमता सि. आर्. पट्टाभिरामार्येण पुस्तकाविष्करणमकारि ।

भूतपूर्वबिहारराज्यपालेन श्री यं. अनन्तशयनमय्यंगारार्येण सपट्टवस्त्रपरिधानं ग्रन्थकृत् प्रशंसितः। श्रीमत्या मणिकृष्णस्वामिनाम्न्या दयाशतकस्तोत्रमगायत । आदौ, संस्कृतरत्नेन श्रीमता यस्. यन्. श्रीरामदेशिकेन सभाशाखोपाध्यक्षेण स्वागतवचनान्यर्पितानि । सोम श्रीनिवासेन सहायकार्यदर्शिना अन्ते धन्यवादाः समर्पिताः।

"भवरः"

# नल उत्तरायण - परीक्षाणां सन्नाहकार्यक्रमः

**Programme of March 1977 Examinations.**

विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणीयान्तिमतिथिः 20–1–77
1 रू. विलंबशुल्केन सह आवेदनपत्राणां प्रेषणायान्तिमतिथिः 31-1-77

आवेदनपत्राणि 20 पैसामात्र - पोस्टलचीटिका (Stamps) प्रेषणे विना मूल्यं प्रेष्येरन् ।

31–1–77 परतः प्रेष्यमाणानि
आवेदनपत्राणि सुतरां न स्वीक्रियेरन् ।

समर्थकोविदपरीक्षयोः निर्णीतकेन्द्रेष्वन्यतमः स्वीकर्तव्यः ।

परिचयः रू. 2–00 अभिज्ञः रू. 4–00
विचक्षणः रू. 6–00 समर्थः रू. 8–00 खण्डशः रू. 5–00
कोविदः रू. 12–00 खण्डशः रू. 5–00

विशेषानुमतिशुल्कम् (Exemption Fee) 5–00
विलम्बशुल्कम् (Late Fee) रू. 1–00

परिचयाभिज्ञविचक्षणसमर्थपाठ्यपुस्तकानि सभायां लभ्येरन् । विशेषजिज्ञासायां 20 पैसामात्राः पोस्टलचीटिकाः (Stamps) प्रेषणीयाः ।

**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ. प्र.)

# पाणिनीयम्

— पं. पेद्दवेङ्कटय्य, व्याकरणशिरोमणिः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

पाणिनिना प्रोक्तं व्याकरणं पाणिनीयम् । पाणिनिव्याकरणात्पूर्वमष्टौ व्याकरणान्यासन् । तानि अतीव दुरूहाणि। तस्मात् पाणिनिः स्वीयं व्याकरणं कर्तुं निश्चित्य, महेशानुग्रहाय शिवमस्तौषीत् । तदा शिवः पाणिनेः वाञ्छां निर्वर्तयितुं निश्चित्य पाणिनिं आहूय अवादीत् । सायन्तने आगन्तव्यं नर्तनसमये इति । तथा कृते ढक्कानिनादमुखेनाक्षरसमाम्नायमश्रावयत् । तदेतत्कथितं नन्दिकेश्वरकारिकायां —

"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्" ॥
शिवः नृत्तावसाने ढक्कां चतुर्दशवारं ननाद । तस्याः ढक्कायाः चतुर्दशसूत्राण्युदभूवन् । तस्मात् चतुर्दशसूत्राणि महेश्वरसूत्राणीति व्यवह्रियते । केवलं तानि शिवसूत्राण्याधारत्वेनावष्ठभ्य अष्टाध्यायपरिमितत्वादष्ठाध्यायीति चतुस्सहस्रसूत्राण्यलिखत् । तानि नैकेनाप्यक्षरेणानर्थवन्ति भवन्ति । पाणिनिमहर्षिः लौकिकवैदिकयोः प्रयोगमनुसृत्य व्याकरणं निर्ममे । तस्मादेव पाणिनीयव्याकरणं व्याकरणान्तरेभ्यः अतिशयितं जागर्ति ।

## पाणिनिव्याकरणस्य पतञ्जलिना रक्षणम्

पाणिनिः सूत्राणि विलिख्य आश्रमे प्रतिष्ठाप्य शिष्यैस्साकं स्नानार्थमगमत् । तस्मिन् समये इन्द्रः पाणिनीयव्याकर-

णात् स्वीयव्याकरणस्य महिमा नंक्ष्यतीति मत्वा अजरूपेण पाणिनेः आश्रमं प्रविश्य सूत्रलिखितानि भूर्जपत्राणि भुक्त्वा स्वस्थानं प्रापत् । तदनन्तरं पाणिनिः शिष्यैः स्नात्वा स्वाश्रमं प्रत्यागच्छत् । तत्र स्वेन लिखितभूर्जपत्राणि नोपलक्षितानि । तदा महर्षिः सशोकः क्रुद्धः अभवत् । तस्मिन्नेव समये आदिशेषः योगेन ऐन्द्रच्छलजालं ज्ञात्वा, पाणिनेः साहाय्यं कर्तुमनाः मानवरूपेण पाणिनेः पुरत आगत्य नमस्कृत्य निकटमागच्छत् । तदा पाणिनिः शान्तोऽभूत् । (सर्वेपि नमस्कारेण शान्तिमन्तो भवन्ति) पाणिनेः निकटं आदिशेषः अञ्जलिपुटेन युक्तः अगच्छत् । तत एव पतञ्जलिः इति तस्य नामधेय मभवत् । पतञ्जलिः पाणिनिनिकटे इन्द्रेण कृतं वञ्चनं प्रकाश्य, महात्मन्! अहं योगमहिम्ना सूत्राणि यथातथं विलिख्य व्यख्यास्ये आज्ञप्तुमर्हसीति अवोचत् । तदा महर्षिः पतञ्जलेः प्रार्थना मूरीचकार । अनन्तरं पाणिनीयसूत्राणां व्याख्यानरूपेण महाभाष्य मवातरत् । अनेन ऐन्द्रव्याकरणात् पाणिनीयव्याकरणं महनीयमिति ज्ञायते ।

## पाणिनिव्याकरणस्य महिमा

आम्नाय - निगमे, मन्त्रपदेषु, ऋचि, यजुषि, काठके, साम-अथर्वणिक - संहितायां, ब्राह्मणे, उपनिषदौ अनर्षे, क्रमपदन्याय-मीमांसा अनुब्राह्मणात्, अनुप्रवचनादिभ्यः, भिक्षुनटसूत्रयोः, महाभारत इत्यादि ग्रन्थानां वर्णनं दृश्यते ।

"साऽस्य देवता" इत्यधिकारे 'क' शुक्र, अपोनप्तृ, महेन्द्र, सोम, वायु, ऋतु उषस्, द्यावा, पृथिवी, सुनासीर, मरुत्वत्, अग्नीषोम, वास्तोष्पति, गृहमेध, अग्नि, काल, महाराजप्रोष्ठपदानां वर्णनं दृश्यते ।

"देवताद्वन्द्वे" इत्याधिकारे अग्नि, सोम, वरुण, दिव्, पृथिवी, उषसां, "तेन प्रोक्तम्" इत्यधिकारे "तित्तिरि, वरतन्तु, खण्डिक, उख, काश्यप, कौशिक, कलाऽन्तेवासि, शौनकादि,कठ, चरक, कलापिन्, छगलिन् आदीनां च वर्णनं दृश्यते ।

आचार्याणां, आपिशलेः, काश्यपस्य, गार्ग्यस्य, गालवस्य, चाक्रवर्मणस्य, भारद्वाजस्य, शाकटायनस्य, शाकल्यस्य, सेनकस्य, स्फोटायनस्य नामानि स्मर्यन्ते ।

## पाणिनिव्याकरणाभ्युदयः

पाणिनिमहर्षिः चतुस्सहस्रसूत्रालंकृता मष्ठाध्यायी मलिखत् । तदनन्तरं सर्वैरपि पाणिनिसूत्र मनुसृत्यैव व्याकरणग्रन्थाः प्रणीताः । यथा — पतञ्जलिः - महाभाष्यं, वैयाकरणभूषणसारं, - कौण्डभट्टः, परिभाषेन्दुशेखरं मञ्जूषां च - नागेशभट्टः, वैयाकरणसिद्धान्तकौमुदी, प्रौढमनोरमां, शब्दकौस्तुभं च भट्टोजिदीक्षित इति सर्वेऽपि व्याकरणग्रन्थाः पाणिन्युपज्ञं सूत्रजाल मनुसृत्यैव लिखिताः एतादृशरीत्या पाणिनिव्याकरणाभिवृद्धिः इति । अतः वयमपि विद्यार्थिनः पाणिनिव्याकरणं पठित्वा सम्यक् वाक्यप्रयोगाणि कृत्वा गीर्वाणभाषायाः सेवां करिष्यामः ।

# मुख्यसूचनाः

पिङ्गलदक्षिणायनपरीक्षातः —

१. आवेदनपत्रमूल्यं रू. ००–५ स्यात् ।

२. पिंगलसंवत्सर - दक्षिणायनपरीक्षा प्रभृति (१९७७ सेप्टम्बर्) परीक्षार्थिनां अङ्कप्रदर्शिनी केन्द्रेभ्यः न प्रेष्येत । विशेषरूपेण स्वप्राप्ताङ्कान् जिज्ञासुना परीक्षार्थिना (रू. १–००) रूप्यकैकेन साकं प्रार्थनापत्रे प्रेष्यते अङ्काः सूच्येरन् ।

३. उत्तरपत्राणां पुनः परिशोधनाय परीक्षाफलितप्रकाशनानन्तरं मासत्रयाभ्यन्तरे प्रतिपत्रं रूप्यपञ्चकं प्रेषणीयम् ।

४. पिंगलवत्सर - दक्षिणायनपरीक्षातः समर्थपरीक्षा (खण्डद्वयात्मकतां विना) खण्डचतुष्टयात्मिका भवेत् । प्रतिखण्डं एकैकमेव प्रश्नपत्रं भवेत् । अभ्यर्थिनः यथासौकर्यं पूर्णतया खण्डशो वा परीक्षां दातुं शक्नुवन्ति । प्रथमपर्याये खण्डशः पूर्णतया वा परीक्षादाने (रू. ८–००) अष्टरूप्यकं शुल्कं भवति । पश्चात् प्रतिखण्डं (रू. ३–००) रूप्यकत्रयं शुल्कम् ।



# महिषशतकं - एका समीक्षा

— "राधा" शूरं श्रीनिवासुलु

[ पूर्वानुबन्धः ]

**महिषे दर्शिताः काश्चन चमत्कृतयः —**

"महिषस्य निर्वस्त्रत्वेऽपि नृपस्य दुरधिकार एव कारणम्" इति अयं चमत्करोति । "अस्मिन् दुष्टे आधिपत्ये अहं कोप मात्रावशिष्टः अस्मि । त्वं तु तेनापि हीनः असि" इति । शिष्टं मे त्वलमल्लकं तदपि न ज्ञाततवास्त्यन्ततः" इति श्लोके वदति । अत्र भ्रातः इति सम्बोधनमपि व्यङ्ग्यमर्यादायां नृपस्य दुष्टानां नराणां च महिषाधर्म्यं सूचयति । महिषस्य बह्वीभिः लोकप्रशस्ताभिः जातिभिः सह कविरयं औपम्यं दर्शयति । तत्र गणनीयोंऽशः एकः । यद्यपि महिषः तिर्यग्जातिसम्बन्धी वाक्-बुद्धि पटुत्वादि शून्यः, तथापि तद्विशिष्टैः साकं अस्य साधर्म्यं सपादने श्लेषमर्यादया कविरयं धन्यो बभूव ।

महिषासुरेण, मध्वाचार्येण, महाराजेन, बालकेन, वेदावधानिना, योगीश्वरेण, श्रीवैष्णवेन, अश्वमेधयागदीक्षितेन, परब्रह्मस्वरूपेण, देवेन्द्रेण, मन्मथेन, सालग्रामेण, समुद्रेण, हनूमता, कार्तवीर्यार्जुनेन, लंकाधीश्वरेण, प्रबन्धेन, भरताचार्येण, दशावतारैः, परमेश्वरेण, पर्वतेन, राजभिः, भारतेन, तद्गताभ्यां, कर्णार्जुनाभ्यां, द्रोणाचार्येण, रावणासुरेण, चन्दाखान्प्रभुणा, व्याकरणतर्कमीमांसा पण्डितैः काव्येन नवरसैः, रसिकशेखरेण, विटेन, वालिना, लङ्कया द्विक्पालकैः, महादानप्रतिग्रहीत्रा रामायणेन च महिषस्य साम्यं

मनोहरया गत्या दर्शयन् आनन्दाम्बुधि डोलाहेलाहेतुः भवत्ययं कविः। एतद्वर्णितानि कानि च न साम्यानि पश्यामः।

पर्णानां पयसां च नित्यमशनैः कालं क्षिपन् वर्तसे,
निष्कम्पस्तपसि स्थितो हि निभृतं त्वं पर्णशालान्तरे।
शेषे स्थण्डिल एव चारु दिवसं द्विस्त्रिर्निमज्जस्यपि,
प्रार्थ्यं किं तव कासरेन्द्र! यदृषेश्चर्यां समालम्बसे ॥

अस्मिन् श्लोके महर्षिणा महिषस्य साम्यं अवर्णि। महर्षिः पर्णभक्षणेन जलपानेन च दिनानि यापयति। त्वमपि तत्कर्मणैव दिनानि यापयसि। महर्षिः निश्चलं गाढे तपसि पर्णशालान्तरे वर्तते। त्वमपि तपसि — अर्थात् माघमासे निश्चलं पर्णशालायामेव वर्तसे। महर्षिः दर्भास्तरणे एव शेते। त्वमपि स्थण्डिले — अर्थात् भूमावेव शेषे। सः प्रतिदिनं द्विवारं त्रिवारं वा स्नाति। त्वमपि तथा। अतः हे महिष! त्वं किं कांक्षन् महर्षि चर्यामवलम्बसे इति न जाने। अत्र श्लोके तपः स्थडिलादि शब्दाः अभङ्गश्लेषविषयास्सन्तः अर्थद्वयं ददति।

धात्र्युत्सङ्गतले विमुञ्चसि मुहुर्विण्मूत्रमस्तत्रपं,
धत्से नाप्यवलालमास्यमनिशं स्नेहेन संवर्धसे।
शङ्ख्व्यापि पयः पिबस्यनुदिनं तस्माददन्तं मुखे,
वत्स! श्रीमहिषेन्द्र बालकमिव त्वां वीक्ष्य नन्दाम्यहम् ॥

अत्र श्लोकेऽपि अभङ्गश्लेषया गत्या बालकस्य महिषस्य च साधर्म्यं अत्यन्ताद्भुतं न्यरूपि। अत्र ललाटास्थ्यर्थे शङ्खपदोपादानमस्य भाषापाण्डित्यमपि स्पष्टं सूचयति।
अत्र सभङ्गश्लेषगतं किमप्युदाहरणं पश्यामः —

नित्यं धीरमनांसि कर्षसि सदा रत्यां समुत्साहवान्,
मुग्धानामुपमासि यासि तपसि ज्याकर्षणे नोज्झितः ।
सामर्थ्यं विषमेषु कर्मसु भजन् अग्रे वसन्तं स्पृशन्,
सत्यं श्रीमहिषेन्द्र! मन्मथ इव प्रत्यक्षमालक्ष्यसे ॥

अत्र श्लोके महिषस्य मदनेन साकं साम्यमवर्णि । मदनः धीराणां मनांसि नित्यं कर्षति । महिषस्तु धीरं अनांसि — अर्थात् शकटानि कर्षति । द्वावपि रत्यां समुत्साहवन्तावेव । द्वावपि मुग्धानामुपमानभूतावेव । ज्यायाः आकर्षणेन मदनः कर्षणेन महिषश्च तृप्तावेव । मदनः विषम इषु कर्मसु साम्यं भजति । महिषः विषमेषु कर्मसु साम्यं वहति । असन्तं अग्रे स्पृशन् मदनः, अग्रे वसन्तं स्पृशन् महिषश्च वञ्छति । अतः महिषः मदनेन सदृशः इति । अत्र अभङ्ग सभङ्ग श्लेषोदाहरणं उभयमपि दिक्सूचिकया प्रादर्शि । विस्तर ग्रन्थपठनेन आस्वाद-यितुं शक्यते एव ।

अयं कविः क्षत्रियाणामेव अभिषेकाधिकारः इति शास्त्र-वादमपि स्वकीय मीमांसान्यायशास्त्रपाण्डित्यैः तिरस्करोति । "राजानं अभिषिञ्चति" इत्यादि वाक्यैः नृपाय अभिषेकविधानं सूचितम् । अत्र मीमांसकाः क्षत्रियजातित्वमेव अभिषेकनिमित्त-मिति व्याजह्रुः । अयं कविस्तु "यः प्रजारक्षकः स एव अभिषेकार्हः । घटत्वदि जातिवत् भूपत्वजातिः न क्वाप्यस्ति" । इति निश्शङ्कं वदति । न केवलं तत् । महिषस्य तादृश प्रजा-पालनसामर्थ्यस्य विद्यमानत्वात् महिषस्याप्यभिषेकार्हता अस्त्ये-वेति विनिगमनाविरहेण साधयति ।

भूपोभूप इतीव किन्त्वनुगता जातिर्घटत्वादिवत्,
भूमावस्ति? य एष रक्षति जनान् राजा स एव स्वयम्।
किम्भूमीपतयः शरारव इमे क्रूराः किराता इव,
प्रायस्सार्वजनीन! कासरपते! राजा त्वमेवासि नः ।।

इति। अस्मिन् प्रबन्धे महिषस्य पूर्वोक्तबहुविषयसाधर्म्ये उपवर्णितेऽपि मृगराजभूते शार्दूलेन स्वजाति प्रभुणा साधर्म्यं नावर्णि। तल्लोपविलोपन पुरस्सरं तेनापि साम्यं उपवर्णयितु कामः किल कविरयं शार्दूलवृत्तमेव आप्रबन्धं स्वीचकार। अतः अनेन कविना शब्दतः शार्दूलसाम्ये अप्रतिपादितेऽपि व्यङ्ग्य-मर्यादया तत्साम्यमपि अस्य सिद्धमेव।

शैलीसौन्दर्यं शय्यासौभाग्यं च अस्य कवित्वे नितरां शोभते। पश्यन्तु वैय्याकरणेन सह साम्यदर्शन प्रस्तावे श्लोकम् —

द्वन्द्वे प्रीतियुतः क्वचित्कृत बहुव्रीहि प्रकर्षः क्वचित्।
पश्चात्तत्पुरुषान्वितः कृत समाहारः क्वचिच्च क्वचित् ।।
शब्देषु द्विगुणादरं कलयसि श्रीकासरक्ष्मापते!
प्रायश्शाब्दिक चक्रवर्तिनमिह त्वामेव मन्यामहे ।।

इति। "त्वं वाली रमसे रुमामुपगतः" इत्यादिषु श्लोकेषु व्यतिरेकालङ्कारादिभिः अस्य अलङ्कारपोषणनैपुणी च स्फुटी भवति।

अस्य प्रबन्धस्य तन्नप्त्रा वाञ्छेश्वरशूरिणा विरचिता श्लेषार्थ चन्द्रिकाख्या व्याख्याऽपि वरीवर्ति। अत्र व्यख्याने व्याख्याताऽयं महान्तं श्रमं स्वीकृत्य बहुशास्त्रविशेषान् सङ्गमयन्

तत्र तत्र दर्शयामास। ग्राहयसि श्रवणादिभिः", "त्वं वाचं समतां दधासि", "भूपो भूपः", "त्वं सद्यस्तनपीडनेन" इत्यादि श्लोकव्याख्यानावसरे एतद् व्याख्यात्रा दर्शितं शास्त्रपाण्डित्य-मपि रसिकलोकमुदावहम् ।

एवं संस्कृतसाहित्यस्य आभरणायमानं एतत् महिषशतकं व्याख्योपशोभितं संस्कृतभाषाविद्भिः अभिमानिभिश्च अवश्यं पठनीयमिति वचन मननृतमेव स्यात् । इति शम् ।

---

# बुद्धिवादात् शास्त्रवादो बलीयान्

अनुवादः – रेगेल्ल नागेश्वरशर्मा,
साहित्यविद्याप्रवीण, पिठापुरम्

जगतीतलेऽस्मिन् केचन बुद्धिवादिनः केचन शास्त्रवादिनश्च दरीदृश्यन्ते। तयोः बुद्धिवादिनः शास्त्राप्रामाणिकाः, शास्त्रवादिनः निर्बुद्धयश्च, इति न। किं तु बुद्धिवादिनः स्वानुकूलशास्त्रवचना-न्येवाऽन्वेषयन्ति । शास्त्रवादिनस्तु शास्त्रमेव प्रमाणमिति मन्वानाः शास्त्रोक्तविषयपोषणाय स्वबुद्धि मुपयुञ्जते । तदेव शास्त्रवचनानां एकवाक्यता शास्त्रवादे सिद्धयति । बुद्धिवादि-नस्तु शास्त्रप्रमाणरहितत्वेन अनियन्त्रितजिह्वाः व्यवस्थारहिताः अनेकधा भणन्ति । इदमेव अस्मिन् लोके अतिसुलभत्वेन सम्यक् आदृत मस्ति ।

बुद्धिगतविषयनिर्धारणाय कदाऽपि तद्बुद्धिरेव प्रमाणं न भवति। यतः रूपग्रहणे चक्षुः प्रमाणं तथैव शब्दग्रहणे श्रोत्रं प्रमाणं भवति। न तत्र बुद्ध्या ग्रहणं संभवति। अत एव अन्धस्य बुद्धिः रूपं, बधिरस्य बुद्धिः शब्दं च ग्रहीतुं असमर्थेति सुस्पष्टमेव। विषयेषु तत्तदिन्द्रियाण्येव प्रमाणानि भवन्ति। अतीन्द्रियविषये तु शास्त्रादन्यन्नास्ति। तादृशशास्त्राननुसरणे अपहास्यतां धत्ते बुद्धिवादः।

अतिमूर्खपदस्य पर्यायवाचकत्वेन 'यथाजात' शब्दः। अत्र विद्याभ्यासरहित इति संसूच्यते। अनेन यथाजातस्य बुद्धेः निकृष्टता, शास्त्राभ्यासशीलिनः बुद्धेः उत्कृष्टता च सम्यक् निरूपिता भासते।

अतः बुद्धे र्विकासः शास्त्रादेव स्यादिति शास्त्रश्रवणाध्ययनादिभि र्वर्धिता बुद्धिः तद्गतविषयनिर्द्धारणसमर्था भवतीति, केवलबुद्धिवादः अनर्थकारीति च ज्ञायते। इदमेव रामेण भरतोपदेशसमये भणितम् —

कश्चिन्नलोकायतिकान् ब्राह्मणांस्तात! सेवसे।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः॥
धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः।
बुद्धिं आन्वीक्षकीं प्राप्य निरर्थं प्रवदन्ति ते॥

एवं बुद्धिवादस्य अनादरणीयता, शास्त्रवादस्यादरणीयता, बुद्धिवादात् शास्त्रवादो बलीयान् इति च निर्दुष्टमुक्तम्।



# कविहृदयम् - २

ना. वा. निगमान्तः, प्रोद्दुटूरु ।

विचित्रा ब्रह्मणः सृष्टिः । वदान्यः प्रकृतिदरिद्रः, कृपणस्तु प्रभूतवित्तेशः । कुलाङ्गना निर्लज्जा, गणिका सलज्जा । विद्वान् मितभाषी, यथाजनस्तु प्रगल्भवाक् । सुन्दराङ्ग्याः भर्ता कुरूपः, रमणीयाकृतेः पत्युः लावण्यशून्या पत्नी धनिकः अपत्यहीनः, रिक्तः प्रायः कुचेलकल्पः । सुगन्धि कैतकादिकं तीक्ष्णकण्टकदूषितं, गन्धरहितं किंशुकादिकं मृदुकण्टकाभाववच्च ।

एवं लोके विस्मयावहं बहु सृष्टिवैचित्र्यं विदधानस्य विधातुर्मनसि कदाचन काचिद्विचित्रसिसृक्षोदभूत् । अत एव चित्रं दिदर्शयिषुः सोऽयं विधिः परीक्षितुमिव काश्चनोत्तमजातिसम्भूताः महिलाः मध्यरहिताः असृजत् । मध्याङ्गाभावे उपरितनभागस्य अधोभागस्य च मिथः संश्लेषाभावात् कुचाद्युन्नतभागस्य इतस्ततः चलनादिकं कथं भवितुमर्हति ? तयोः एकाकारत्वदर्शनं च कथं ? इतीमां शङ्कां परिहरन्निव चित्रनिर्माता विधाता तदीयनितम्बजघनाद्यङ्गगमनानुकूलां अदृष्टपूर्वां अपूर्वां कांचन उपरिगमनशीलां शक्तिं तदीय कुचाद्यङ्गस्य (उपरिभागस्य) कल्पयामास । तथाच नितंबाद्यधोऽङ्गं यत्र यत्र चलति तदनुकूलं कुचाद्युपरितनं अङ्गं उपर्येव याति । ततश्च दिदृक्षूणां – संश्लिष्टैकाकारप्रतीतिः भ्रान्तिरूपा सञ्जायते । लोके उभयोः संयोगे सति एकता भवति संभूय चलनं च । अत्र तु संबन्धा-

भावेऽपि एकाकारप्रतीतिः सम्भूयगमनं च भवत इति विचित्रा खलु विधेः सृष्टिः ?

इममेव भावं प्रकाशयति पद्यवरोऽयं; पठयतां "चित्रं दिदर्शयिषुणा जनितस्य यस्यां मध्यं विनैव विधिना महिलाजनस्य। अङ्गं नितम्बजघनादि यतो यतोऽधस्तुङ्गं कुचाद्युपरि याति ततोऽनुकूलम् ।"

---

दानप्रशंसा —

अनुकूले विधौ देयं यतः पूरयिता हरिः ।
प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ।।

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ।।

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ।।

त्याग एको गुणः श्लाघ्यः किमन्यै र्गुणराशिभिः।
त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ।।

भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् ।
दारिद्र्य मप्रदानेन तस्माद्दानपरो भवेत् ।।



# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

"बापूमहोदय ! सम्पुटकस्यास्योपरि हस्ताक्षरकृपा भवतु । अत्र विश्वविख्यातानां "लायिड्जार्ज्, 'क्लेमिको' प्रभृतीनां भिन्न-भिन्नराष्ट्रनायकानां नामाक्षराणि लसन्ति" इति गान्धीमहात्मानं सप्रश्रय मभ्यर्थयामास कश्चन वार्ताप्रेषकः अमेरिकाराष्ट्रीयः वेब्-मिलर् - अभिधानः महाशयः ।

तदानीं महात्माऽऽङ्ग्लदेशे, भारतीयां दुर्दशां प्रति शासक-वर्गेण साकं विचारविनिमयार्थं तत्र गता आसीत् ।

वार्ताप्रेषकस्याभ्यर्थनानुसारं तस्य हस्तात् सम्पुटकं गृहीत्वा तत्पिधान मपावृत्यापश्यत् । तत्रासन् धूमवर्तिकाः । महात्मा-वदत् "अहो ! इदं धूमवर्तिकानां करण्डकं" इति ।

"किं तेन ?" इति सहसाऽब्रवीत् हस्ताक्षरग्राहकः ।

"नाहं" धूमपानस्य समर्थकः अये ! स्पष्टं भवान् जानाति मदीयं मतम् । अतः कथं वा मद्विरुद्धवस्तुनि मदीयं नाम कथं वा लिखेयम्? इत्युक्त्वा पुनरब्रवीत्सः गान्धी "यदि भवता प्रतिज्ञायते अस्मिन् करण्डके कदाप्यायत्यां न वर्तिकाः स्थापया-मीति तर्हि अवश्यं मदीयं हस्ताक्षरं प्राप्नोषि" इति ।

गान्धीमहोदयस्य हस्ताक्षरं प्रति नितरामासक्तः 'वेब्मिलर्' महाशयः तस्यादेश मन्वतिष्ठत् । धूमवर्तिकाकरण्डकं तत्तु महात्मनः नाम्ना शुशुभे ।

तद्दिनादारभ्य भाजनं तत् धूमवर्तिकास्थाने 'सन्दर्शक कर्गजखण्डानां (Visiting Cards) आश्रयमभूत् ।

इयं तावत् महती घटना तेनैव वार्ताप्रेषकेण 'वेब्मिलर्' महाशयेन लिखिते "I found no peace" इत्यभिधानके ग्रन्थे स्पष्ट मुल्लिखिताऽस्ति ।

## नवपर्वोदयः

—जयेशः, पुसद् ।

विदेशीयसहाय्येन कलितं प्रतिपक्षकैः ।
राष्ट्रीयसङ्कटं ज्ञातं चातुर्येण तथा यदा ॥ १

रक्षणार्थं स्वराष्ट्रस्य आपत्कालः प्रघोषितः ।
तथा राष्ट्रविकासार्थं स्वयोजना पुरस्कृता ॥ २

भ्रष्टाचारं पराभ्रष्टुं निर्मातुमनुशासम् ।
निर्मातुं कार्यकौशल्यं दमयितुं च दुर्जनम् ॥ ३

अपहर्तुं च दारिद्र्यं आर्थिकतत्वसंयुतः ।
एकविंशतिसूत्रेण कार्यक्रमः सुगुंफितः ॥ ४

किमहो ! महदाश्चर्यं द्रुतं गच्छति दुर्मतिः ।
सुमतिर्द्रुतमायाति तिरोहिता दरिद्रता ॥ ५

प्रस्फुरितं च सौजन्यं स्फुरितमनुशासनम् ।
इन्दुमतिर्द्युतिं याति प्रजाः यान्ति प्रसन्नताम् ॥ ६

# भारतवर्ष देशः

— ले. देवेन्द्रशास्त्री, नौलागढ़, मिथिला।

जयति भारतवर्ष देशः।
यस्य पावनभूमिभागे क्रीडितुं वाञ्छति परमेशः।

उत्तरस्यां दिशि नगेशो यत् पुरस्ताद् ब्रह्मदेशः।।
वारिधिर्दिशि दक्षिणस्यां पश्चिमायां द्वारिकेशः।। जयति।।

यं सदा चकमे कुबेरो जन्मनाऽञ्चति राघवेशः।
यत्र नूनं गूढलिङ्गं ब्रह्म नृत्यति गोपवेषः।। ।। जयति।।

यत्र वेदानां प्रकाशः स्मृतीनामपि दिव्यहासः।
किन्न संस्मारयति चेतसि भारते कृष्णोपदेशः।। ।। जयति।।

मुक्तिर्निवसतां यत्र दासी राजते साऽत्रैव काशी।
धाम्नि धाम्नि सुशोभते चाद्यापि भूतपतिर्महेशः।। जयति।।

यत्र कलितं सामगीतं यत्र ललितं श्यामगीतम्।
पूरितस्सरितां प्रवाहैर्निर्झरैर्यस्य प्रदेशः।। ।। जयति।।

यस्य गायति यशो भासः येन खेलति कालिदासः।
स्वरैर्भवभूतेः प्ररोदिति यस्य पञ्चवटीप्रदेशः।। ।। जयति।।

संस्मृत्य जननीं जनकतनयां सतीं सावित्रीं सुधन्याम्।
व्यञ्जयत्यद्यापि नार्याः वीरभावं दुर्गशेषः।। ।। जयति।।

संसृतौ यस्याऽद्वितीया राजनीतिः कौटिलीया ।
साम्प्रतं मेधाविनां यन्नीतिलेशे न प्रवेशः ॥ ॥ जयति ॥

यः प्रसूते नृपमशोकं प्राकरोद्यो जन्मशोकम् ।
यस्य देशविदेशयोर्जागर्ति सम्प्रति कीर्तिशेषः ॥ जयति ॥

यवनललनाहृदवताप: प्रतापो यस्य प्रतापः ।
स्मर्यते श्रद्धानतैः शिवराजसिंहो वीरवेषः ॥ ॥ जयति ॥

मदनमोहनमालवीयः किन्तु धर्मसुतोऽद्वितीयः ।
संस्कृतिं प्रति यस्य चेतसि जन्मनाऽभूदभिनिवेशः ॥ जयति ॥

सुभाषो वीरो हुतात्मा सुबन्धो गान्धिर्महात्मा ।
ययोस्तपसा गौरवं पुनराप्तवान् रम्यः स्वदेशः ॥ जयति ॥

यस्य ललना वीरप्रसवा द्विषे तीक्ष्णा धनुष इषवः ।
तज्जनैर्मर्षिष्यते किं चीनपाकादेः प्रवेशः ॥ ॥ जयति ॥

शं तनोतु सदा मुरारिः कृपां कुरुतां रावणारिः ।
यशो विस्तारयत्वधुना कल्किरूपो वीरवेषः ॥ ॥ जयति ॥



त्रिदिवभूषण आन्ध्रप्रदेशास्थानकवि
श्रीविश्वनाथसत्यनारायण कविसार्वभौम

# स्मृत्यञ्जलिः

— के. यस्. रामानुजाचार्यः, M. A. मेल्लूरु

श्रीविश्वनाथसत्य –
नारायण इति विश्वविश्रुतः सुमनाः ।
आन्ध्रास्थानकवीन्द्रः,
प्राप परं धाम हा! विसृज्यास्मान् ॥

नलोऽनलः स्वयं जातः,
नाश्वयुक्चान्वकम्पत ।
कथं कृष्णदशम्येषा,
हा ! कलापूर्ण मग्रसत् ॥

कवीन्द्राणां नेता, सरसनवलानां रचयिता,
विनेता दुर्वाचां, विबुधफणितीनां विवरिता ।
प्रबन्धा काव्यानां, ललितमनुवक्ताऽन्यसुकृतेः,
कथं त्यक्त्वा यातः त्रिदिव मय मस्मान् प्रियसुहृत् ॥

कवीशानस्सोऽयं रघुपति पदाम्भोज मधुपः,
प्रणेताऽस्मिन् लोके रघुपति कथाकल्पकतरोः ।
भुवं त्यक्त्वा देवानपि दिवि मुदाऽन्यादृगमृतं,
स्वसूक्तीना मास्वादयितुमिव भेजे गुरुपदम् ॥

विद्यावपीठी बहुमानपूर्वं,
यं मानयित्वा भुवि मानिताऽभूत् ।
तं मानयत्यद्य मुदा सुधर्मा,
कवीश्वरं स्वागत सत्क्रियाभिः ॥

---

शम्भुः —

शम्भुर्नृत्यति पार्वतीसहचरः सायं च, शम्भुं भजे,
शश्वत् सन्तु च शम्भुनाऽत्र विपदां नाशाः नमः शम्भवे ।
शम्भोः सद्गतिराप्यते भजनतः, शम्भोः पदं सेव्यतां,
शम्भावेति लयं लये जगदिदं, शम्भो प्रभो पाहि माम् ॥

स्कन्दः —

स्कन्दो मे हृदये सदा निवसतात्, स्कन्दं भजे शम्भुजं,
स्कन्देनाखिलपातकं परिहृतं, स्कन्दाय कुर्वे नमः ।
स्कन्दाद्धावति देवतारिनिवहः, स्कन्दस्य मूर्तिं श्रये,
स्कन्दे चित्तमचञ्चलं भवतु मे, स्कन्दाऽव वल्लीश माम् ॥

— बि. चन्द्रशेखरभट्टः, मद्रास् २८

# नैराश्यं परमं सुखम्

— ज. शेषाद्रि अय्यंगार्यः,
न्यायाध्यापकः, तिरुपति ।

[ पूर्वानुबन्धः ]

यदि वयं सर्वेऽपि स्वार्थसम्पादनैकदृष्टिं परावृत्य परदुःखनिराकारणासमर्था अपि तदीयं भागमात्मन अनभिलषन्तः पूर्वनिर्दिष्ट वस्तुपञ्चकलाभमात्रेण सन्तुष्टान्तरङ्गाः अनपेक्षाधिकार्जने अत्याशां विसृजेम, तावता वयमपि कलियुगमुनयः कथं न स्याम ?

यदि च अत्याशया अपेक्षिता दधिकं धनधान्यगृहक्षेत्रादिकं सम्पादयेम, तर्हि तद्वयं निर्भयं रक्षितुमुपभोक्तुं वा कथं शक्नुयाम ? यतो हि सम्पादितं वसु राजानः चोराः दायादाः वणिजः अन्ये दुर्जनाश्च कुशलै रुपायैः कणश कृत्स्नं अपहरेयुः । "अर्थानां अर्जने दुःखं, आर्जितानां च रक्षणे । रक्षितानां व्यये दुःखं धिगर्थं दुःखसंश्रय"मिति अनुभवज्ञाना मुक्तिः ।

अथवा श्रमेण अस्माभिः वसु रक्ष्यते, तदापि किं तत्सर्वदा अस्मान् अनुवर्तेत वा ? नैव । यदुच्यते "अर्था गेहे निवर्तन्ते श्मशाने मित्रबान्धवाः । सुकृतं दुष्कृतं चैव गच्छन्त मनुगच्छति ॥" इति । अन्ततः अत्यधिकधनार्जनेन स्वस्य धनित्वाभिमानमूलक महतां तृणीकार एव लाभो भवेत् । किं च रिक्तानां नराणां स्वोपरि ईर्ष्याद्वेषोत्पादनेन तेभ्यः भीतिरपि धनिभिः सम्पाद्यते । अतश्च तेषां धनानां समुचितपात्रेषु व्यय एव क्षेमाय स्यात् ।

कोशगृहे अधिकतया धनेषु सम्पन्नेषु सत्सु, पूर्वे राजानः तानि विद्वद्गोष्ठीषु शिल्पशालासु देवमन्दिरेषु सङ्गीतनृत्यकलासु इष्टापूर्तदत्तेषु तीर्थयात्रासु च व्ययीकुर्वन्ति स्म ।

रघुमहाराजः विश्वजिद्यागे सर्वस्वदक्षिणे कोशं सर्वमपि प्रजाभ्यो वितीर्य चीरवल्कलवसनः कुटीरवासी मृण्मयपात्रेणातिथ्यं रचयामासेति रघुवंशे "समृण्मये वीत हिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः" इति कविसम्राड् वर्णयति । अत एव आदिराजानां यशः आचन्द्रतारकं भुवि गीयते ।

अतो वयमित्थमालोच्य वैराग्यमपि संपाद्य नैराश्यमवलम्ब्य अनपेक्षितसम्पादने आयासं सन्त्यज्य शान्तियुतं जीवनं अवलम्बेमहि, तर्हि लोकस्य वय मादर्शपुरुषाः स्याम । तमोविपणिभ्यः दूरीभूतानां किमिति भयेन जीवितव्यं अस्माकं स्यात् ।

तथा च स्वयमेव नियतात्मनां अस्माकं विषये आत्ययिकपरिस्थितिप्रकटनं वा विंशतिसूत्रात्मकः आर्थिककार्यक्रमो वा स्थावरजङ्गमात्मक वसुस्वाम्यनियन्त्रणा वा पुनरुक्तायेत ।

ईदृशं नैराश्यं परमसुखसाधनमिति न मदीयं इदं वाक्यं, किन्तु श्रीभागवतपुराणे एकादशस्कन्धे नवमाध्यायान्ते शुकब्रह्मर्षिणा परीक्षिते राज्ञे उपदिष्टश्लोकार्धोऽयं "आशा हि परमं दुःखं नैराश्यं परमं सुखमिति" ।

अथ प्रकृतमनुसरामः । अतश्च "सर्वे जनाः सुखिनो भवन्तु" इत्याशासानाः वयं निराडम्बरजीवनेन आवश्यकार्थ लाभमात्र सन्तोषेण अनावश्यकवस्तुषु नैराश्येन च जीविकां निर्वर्त्य सम्पूर्णस्य भारतराष्ट्रस्य परंपरया सुखं संपादयितुं समर्थाः भवेमेति आशास्महे।

# सम्पादकस्य विज्ञप्तिः



सहृदयलेखकानां सविधे गैर्वाणी सम्पादकवर्गस्य सविनयमियं विज्ञप्तिः —

१. दीर्घरचना प्रेषणं नैव कर्तव्यम् । द्वित्रपुटपरिमित विषयप्रेषणे गैर्वाण्यां प्रकाशनं सुलभतरं भवेत् ।

२. स्वीयरचना - पुनःप्रेषणं यद्यभिलष्यते, तर्हि पोस्टल् - चीटिकाः यावदपेक्षं प्रेषणीया ।

३. रचनानां पुनरवलोकनानन्तरं सम्पदकवर्गानुमता एव ताः गैर्वाण्यां प्रकाश्येरन् । अतः पुनः पुन स्तद्विषये पत्रलेखने कृतेऽपि पत्रव्यवहारः न करिष्यते ।

४. अनुवर्तमानविषया प्रकाश मपेक्षमाणानां सुदीर्घरचनानां कृते प्रथमत एव पत्र-व्यवहारः कर्तव्यः । स्वीकृतरचना एव तादृशा अनुवर्तेरन् ।

लेखकाः पत्रिकानिर्वहणे विद्यमानं क्लेशजात मवगत्य सहकुर्युरिति सविनयं प्रार्थ्यते ।

इति,

**सम्पादकः**

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No 1

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००



# प्रहेलिका



राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ ।
अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥

कुञ्जी — राक्षसानां इभ्यः = स्वामी, रावणः जनकस्य सुतां सीतां हृत्वा पुरीं = लंकां, ययौ ।

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.